कन्या के विवाह का समय और ग्रहशुद्धिविचार।

**गुरुशुद्धिवशेन कन्यकानां समवर्षेषु षडब्दकोपरिष्टात्।**
**रविशुद्धिवशाच्छुभो नराणामुभयोश्चंद्रविशुद्धितो विवाहः ॥१२॥**

अन्वयः-षडब्दकोपरिष्टात् ( षड्वर्षातिक्रमानन्तरं ) समवर्षेषु गुरुशुद्धिवशेन कन्यादानं विवाहः शुभो 'भवति'। रविशुद्धिवशात् नराणाम् (पुरुषाणाम्) विवाहः शुभः स्यात्। रविचन्द्रविशुद्धितः उभयोः (वरकन्ययोः) विवाहः शुभः स्यात् ॥१२॥

भाषा--छ वर्ष के उपरान्त बृहस्पति के बल में कन्या का विवाह तथा रवि के बल में वर का करना चाहिये, पर कन्या और वर के चन्द्रमा का बल देख लेना भी अत्यन्त आवश्यक है ॥ १२ ॥

विवाह में मासविचार।

**मिथुनकुंभमृगालिवृषाजगे मिथुनगेपि रवौ त्रिलवे शुचेः।**
**अलिमृगाजगते करपीडनं भवति कार्तिकपौषमधुष्वपि॥१३॥**

अन्वयः—रवौ मिथुनकुम्भमृगालिवृषाजगे ( मिथुनकुम्भकरवृश्चिकवृषमेषराशिस्थिते ) मिथुनगेऽपि रवौ शुचेः ( आषाढ़स्य ) त्रिलवे ( तृतीयांशे ) करपीडनं ( पाणिग्रहणम् ) भवति। अलिमृगाजगते ( वृश्चिकमकरमेषस्थिते ) सूर्ये कार्तिकपौषमधुषु अपि (कार्तिकपौषचैत्रेष्वपि) 'मासेषु' करपीडनं (विवाहो भवति) ॥१३॥

भाषा--मिथुन, कुम्भ, मकर, वृश्चिक, वृष, मेष और मिथुन पर सूर्य के रहते आषाढ़ की प्रतिपदा से दशमी तक विवाह शुभ होता है। सूर्य्य वृश्चिक के हों तो कार्तिक में, मकर के हों तो पौष में और मेष के हों तो चैत्र में भी विवाह शुभ होता है ॥ १३ ॥

जन्ममासादि युक्त निषेध विधान।

**आद्यगर्भसुतकन्ययोर्द्वयोर्जन्ममासभतिथौ करग्रहः।**
**नोचितोऽथ विबुधैः प्रशस्यते चेद्द्वितीयजनुषोः सुतप्रदः ॥१४॥**

अन्वयः-आद्यगर्भसुतकन्ययोर्द्वयोः जन्ममासभतिथौ ( जन्ममासजन्मनक्षत्रजन्मतिथौ ) करग्रहः ( विवाहः ) नोचितः ( निषिद्धः )। द्वितीयजनुषोः आद्यगर्भयोः 'सुतकन्ययोः' करग्रहः सुतप्रदः विबुधैः ( विद्वद्भिः ) प्रशस्यते ( समीचीनमुच्यते ) ॥ १४ ॥

भाषा--प्रथम गर्भ के पुत्र और कन्या का विवाह जन्ममास, जन्मनक्षत्र और जन्म तिथियों में अशुभ है, पर द्वितीय गर्भ की कन्या और पुत्र का विवाह पुत्रदायक होता है ॥ १४ ॥

त्रिज्येष्ठनिर्णय ।

ज्येष्ठं द्वंद्वं मध्यमं संप्रदिष्टं त्रिज्येष्ठं चेन्नैव युक्तं कदापि ।
केचित्सूर्यं वह्निगं प्रोज्झ्य चाहुर्नैवान्योन्यं ज्येष्ठयोः स्याद्विवाहः ॥१५॥

अन्वयः—ज्येष्ठद्वन्द्वं ( सुतकन्ययोर्ज्येष्ठत्वे सति ) 'करग्रहणम्' मध्यमं सम्प्रदिष्टम् । त्रिज्येष्ठं ( पुत्रो ज्येष्ठः कन्या ज्येष्ठा ज्येष्ठमासः एतत्त्रयं ) चेत् कदापि 'पाणिपीडनम्' न युक्तम् । केचित् ( विद्वांसः ) वह्निगं ( कृत्तिकास्थं ) सूर्यं प्रोज्झ्य ( परित्यज्य ) 'पाणिपीडनम्' आहुः ( कथयन्ति ) । अन्योन्यं ज्येष्ठयोः ( ज्येष्ठसुतस्य ज्येष्ठया कन्यया ) विवाहः नैव स्यात् ॥ १५ ॥

भाषा--ज्येष्ठ मास, ज्येष्ठ पुत्र और ज्येष्ठ कन्या भी हो तो विवाह मध्यम कहलाता है । यह कभी करने योग्य नहीं है । किसी किसी आचार्य का मत है कि ज्येष्ठ में यदि कृत्तिका के सूर्य हों तो शुभ है, पर तीनों ज्येष्ठ वाला विवाह शुभ नहीं होता ॥ १५ ॥

विवाहादि शुभकार्यसे द्वितीयविवाहका नियम ।

सुतपरिणयात्षण्मासांतःसुताकरपीडनं
न च निजकुले तद्वद्वा मण्डनादपि मुण्डनम् ।
न च सहजयोर्देये भ्रात्रोः सहोदरकन्यके
न सहजसुतोद्वाहोऽब्दार्धे शुभे न पितृक्रिया ॥१६॥

अन्वयः—निजकुले ( स्ववंशे ) सुतपरिणयात् षण्मासान्तः ( पुत्रविवाहात् षण्मासं यावत् ) सुताकरपीडनम् ( कन्यकोद्वाहः ) न 'स्यात्' । वा तद्वत् मण्डनादपि मुण्डनं न कार्यम् । सहजयोः (सोदरयोः भ्रात्रोः) सहोदरकन्यके न देये । सहजसुतोद्वाहो (सोदरसुतकन्यकोद्वाहो) अब्दार्धे ( षण्मासाभ्यन्तरे ) न कार्यः । शुभे ( विवाहादिमङ्गलकार्ये ) पितृक्रिया ( श्राद्धादिकम् ) न कार्या ॥ १६ ॥

भाषा—पुत्र के विवाह के पश्चात् छः मास पर्यन्त कन्या का विवाह करना अशुभ है तथा यज्ञोपवीत और मुंडन आदि कर्म पुत्र वा कन्या

के विवाह के पश्चात् छः महीने तक अशुभ है, पर वर्ष बदल जाय तो शुभ होता है। माता के दो पुत्र तथा एक माता की दो कन्याओं का विवाह नहीं होता। पुत्र के विवाह के बाद दूसरे सहोदर पुत्रका विवाह छः महीने के अन्दर नहीं करना चाहिये। विवाह के पश्चात् छः महीने तक पितृकार्य ( श्राद्ध ) इत्यादिक अशुभ है ॥ १६ ॥

विवाह निश्चय के वाद त्रिपुरुष में मृत्यु का निर्धारण।

वध्वा वरस्यापि कुले त्रिपूरुषे नाशं व्रजेत्कश्चन निश्चयोत्तरम् ।
मासोत्तरं तत्र विवाह इष्यते शांत्याथवा सूतकनिर्गमे परैः ॥१७॥

अन्वयः—निश्चयोत्तरम् ( वाग्दानानन्तरम् ) यदि वध्वाः वरस्यापि त्रिपूरुषे ( पुरुषत्रयमध्ये ) कश्चन ( सपिंडः पुरुषः ) नाशं व्रजेत् म्रियात् 'चेत्' तत्र मासोत्तरं ( मरणदिवसात् त्रिंशद्दिनानन्तरं ) विवाह इष्यते। अथवा सूतकनिर्गमे शान्त्या विवाहः परैः ( अन्याचार्यैः ) इष्यते ॥ १७ ॥

भाषा--विवाह निश्चय हो जाने पर यदि तीन पीढ़ी के भीतर के किसी पुरुष की मृत्यु हो जाय तो एक महीने तक विवाह नहीं करना चाहिये। किसी किसी आचार्य का मत है कि शान्ति करके अथवा सूतक विताकर विवाह कर सकते हैं ॥ १७ ॥

मुंडनादिकर्मनिर्णय।

चूडाव्रतं चापि विवाहतो व्रताच्चूडा च नेष्टा पुरुषत्रयांतरे ।
वधूप्रवेशाच्च सुताविनिर्गमः षण्मासतो वाब्दविभेदतः शुभः ॥१८॥

अन्वयः—पुरुषत्रयान्तरे विवाहतः 'षण्मासाभ्यन्तरे' चूडाव्रतं चापि नेष्टं। व्रतात् ( व्रतबन्धात् ) चूडा ( चूडाकर्म ) च नेष्टा। वधूप्रवेशात् 'षणमासाभ्यन्तरे' सुताविनिर्गमः नेष्टः। अब्दविभेदतः ( सम्वत्सरपरिवर्तनात् ) 'षण्मासाभ्यन्तरेऽपि' शुभः ( कल्याणकरः ) स्यात् ॥ १८ ॥

भाषा--विवाह के पश्चात् छः महीने तक मुण्डन तथा यज्ञोपवीत और यज्ञोपवीत से छः महीने तक तीन पीढ़ी के भीतर मुण्डन अशुभ है। वधूप्रवेश से छः मास तक कन्याका विवाह करना मना है, पर वर्ष-भेद से शुभ माना गया है ॥ १८ ॥

नक्षत्र वश शुभाशुभ फल ।

श्वश्रूविनाशमहिजौ सुतरां विधत्तः
कन्यासुतौ निऋतिजौ श्वशुरं हतश्च ।
ज्येष्ठाभजाततनया स्वधवाग्रजं
शक्राग्निजा भवति देवरनाशकर्त्री ॥१९॥

अन्वयः—अहिजौ ( आश्लेषानक्षत्रोत्पन्नौ ) कन्यासुतौ,श्वश्रूविनाशं ( साक्षाद्वरमातुः कन्यायाः मातुर्वा विनाशं, विधत्तः ( कुरुतः ) तथा निऋतिजौ ( मूलनक्षत्रोत्पन्नौ कन्यासुतौ ) श्वशुरं ( कन्याया वरस्य वा पितरं ) हतः ( नाशयतः ) । ज्येष्ठाभजाततनया ( ज्येष्ठानक्षत्रोत्पन्ना पुत्री ) स्वधवाग्रजं ( भर्तृज्येष्ठभ्रातरं ) हन्ति ( नाशयति ) । शक्राग्निजा ( विशाखानक्षत्रोत्पन्ना पुत्री ) देवरनाशकर्त्री ( कनिष्ठभ्रातृहन्त्री ) 'भवति' ॥ १९ ॥

भाषा—कन्या और वरका जन्म यदि अश्लेषा नक्षत्र का हो तो सासु को और मूल नक्षत्र का हो तो स्वसुर का नाश करता है । ज्येष्ठा नक्षत्र की जन्मी कन्या जेष्ठ ( पति के बड़े ) भाई का और विशाखा की जन्मी कन्या देवर का नाश करती है ॥१९॥

उक्त दोष का अपवाद ।

द्वीशाद्यपादत्रयजा कन्या देवरसौख्यदा ।
मूलांत्यपादसार्पाद्यपादजाते तयोः शुभम् ॥ २० ॥

अन्वयः—द्वीशाद्यपादत्रयजा (विशाखायाश्चरणत्रये संजाता ) कन्या, देवरसौख्यदा ( भर्तुः कनिष्ठभ्रातृसुखदायिनी) 'भवति' । मूलान्त्यपादसार्पाद्यपादजाते ( मूलचतुर्थचरणोत्पन्नौ कन्यासुतौ श्वशुरसौख्यदौ, आश्लेषाप्रथमचरणोत्पन्नौ श्वश्रूसौख्यदौ ) तयोः (श्वश्रूश्वशुरयोः ) शुभे ( कल्याणकारिणौ ) 'भवतः' ॥२०॥

भाषा—विशाखा के तीन चरणों में जन्मी कन्या देवर को, मूल के चौथे चरण की कन्या पति और श्वसुर को और आश्लेषा के प्रथम चरण की पुत्री ससुर और सास को सुख देती है ॥२०॥

वर्णो वश्यं तथा तारा योनिश्च ग्रहमैत्रकम् ।
गणमैत्रं भकूटं च नाडी चैते गुणाधिकाः ॥ २१ ॥

अन्वयः–वर्णो, वश्यं तथा तारा, च 'पुनः'योनिः,ग्रहमैत्रकम् ,गणमैत्रं,भकूटम् एते गुणाधिकाः (वर्णादिमैत्र्यां सत्यां क्रमशः गुणाधिकाः एकैकगुणाधिका भवन्ति)

भाषा—कन्या और वर की जन्मपत्री से मिलान करे। वर्ण १ गुण, वश्य २ गुण, तारा ३ गुण, योनि ४ गुण, ग्रहमैत्री ५ गुण, गणमैत्री ६ गुण, भकूट ७ गुण और नाड़ी ८ गुण विवाह में विचारने योग्य है ॥२१॥

प्रथमवर्णकूट विचार।

द्विजा झषालिकर्कटास्ततो नृपा विशोंऽघ्रिजाः।
वरस्य वर्णतोधिका वधूर्न शस्यते बुधैः ॥ २२ ॥

अन्वयः—झषालिकर्कटाः ( मीनवृश्चिककर्काः ) द्विजाः ( ब्राह्मणाः ) ततः ( अनन्तरमन्ये मेषसिंहधनराशयो ) नृपाः ( क्षत्रियाः, वृषकन्यामकराः ) विशः ( वैश्याः, मिथुनतुलाकुम्भाः ) अंघ्रिजाः ( शूद्राः ) 'तत्र' वरस्य वर्णतः अधिका ( श्रेष्ठा ) वधूः बुधैः ( विद्वद्भिः ) न शस्यते ॥ २२ ॥

भाषा—मीन, वृश्चिक और कर्क राशि ब्राह्मण वर्ण, मेष, सिंह और धनराशि क्षत्रिय वर्ण, वृष, कन्या और मकर राशि वैश्य वर्ण और मिथुन तुला कुम्भ राशि शूद्र वर्ण होता है। वर से कन्या यदि श्रेष्ठ वर्ण की हो तो अशुभ है ॥ २२ ॥

वर का गुण-विचार।

हित्वा मृगेन्द्रं नरराशिवश्याः सर्वे तथैषां जलजाश्च भक्ष्याः।
सर्वेपि सिंहस्य वशे विनालिं ज्ञेयं नाराणां व्यवहारतोऽन्यत् ॥२३॥

अन्वयः—मृगेन्द्रं ( सिंहं ) हित्वा ( परित्यज्य ) सर्वे ( राशयः ) नरराशि-वश्या 'भवन्ति' तथा एषां ( नरराशीनां ) जलजाः ( मकरकुम्भकर्काः ) भक्ष्याः 'भवन्ति' तु ( पुनः ) सिंहस्य अलिं ( वृश्चिकं ) विना सर्वेऽपि वश्याः 'भवन्ति' अन्यत् अनुक्तम् नराणां व्यवहारतः ज्ञेयम् ॥ २३ ॥

भाषा--सिंह को छोड़ कर सब राशि नरराशियों के वश्य तथा जलचर भक्ष्य हैं। इसी प्रकार वृश्चिक को छोड़ सब सिंह के वश्य हैं। चौपाये और थलचरों का वश्यावश्य व्यवहार से जानना चाहिये ॥२३॥

| | | | | | |
|---|---|---|---|---|---|
| चतुष्पद | २ | ॥ | १ | ० | २ |
| मनुष्य | २ | २ | ० | ० | ० |
| जलचर | १ | ० | २ | २ | २ |
| वनचर | ० | ० | २ | २ | ० |
| कीट | १ | ० | १ | ० | २ |

## ताराकूटविचार ।

कन्यक्षोद्वरभं यावत्कन्याभं वरभादपि ।
गणयेन्नवभिः शेषत्रीष्वद्रिभमसत्स्मृतम् ॥ २४ ॥

अन्वयः—कन्यर्क्षात् ( कन्यानक्षत्रमारभ्य ) वरभं यावत् ( वरनक्षत्रपर्यन्तं ) गणयेत् । वरभादपि ( वरनक्षत्रमारभ्य ) कन्याभं ( कन्यानक्षत्रपर्यन्तं ) गणयेत् । नवहृच्छेपे त्रिष्वद्रिभम् ( त्रिपञ्चसप्तभं ) असत् ( अशुभं ) स्मृतम् ॥ २४ ॥

भाषा—कन्या के जन्मनक्षत्र से वर के जन्मनक्षत्र तक और वर के जन्मनक्षत्र से कन्या के जन्मनक्षत्र तक गिने और शेष अंक में नौ का भाग दे । यदि तीन पांच व सात बचे तो अशुभ जानना चाहिये ॥ २४ ॥

## योनिकूटविचार ।

अश्विन्यंबुपयोर्हयो निगदितः स्वात्यर्कयोः कासरः
सिंहो वस्वजपाद्भयोः समुदितो याम्यांत्ययो कुंजरः ।
मेषो देवपुरोहितानलभयोः कर्णाम्बुनोर्वानरः
स्याद्वैश्वाभिजितोस्तथैव नकुलश्चन्द्राब्जयोन्यो हरिः ॥२५॥
ज्येष्ठामैत्रभयोः कुरंग उदितो मूलार्द्रयोः श्वा तथा
मार्जारोऽदितिसार्पयोरथ मघा योन्योस्तथैवोंदुरः ।
व्याघ्रो द्वीशभचित्रयोरपि च गौरर्यम्णवुध्न्यर्क्षयो-
र्योनिः पादगयोः परस्परमहावैरं भयोन्योस्त्यजेत् ॥ २६ ॥

अन्वयः—अश्विन्यम्बुपयोः ( अश्विनीशततारयोः ) हयः ( अश्वयोनिः ) निगदितः ( प्रोक्तः )। स्वात्यर्कयोः ( स्वातीहस्तयोः ) कासरः ( महिषयोनिः ) 'निगदितः' । विश्वजपाद्भयोः ( धनिष्ठापूर्वाभाद्रपदयोः ) सिंहः ( सिंहयोनिः ) समुदितः ( कथितः ) । याम्यान्त्ययोः ( भरणीरेवत्योः ) कुञ्जरः ( हस्तियोनिः ) 'समुदितः' । देवपुरोहितानलभयोः ( पुष्यकृत्तिकयोः ) मेषः ( मेषयोनिः ) 'समुदितः' । कर्णाम्बुनोः ( श्रवणपूर्वाषाढ़योः ) वानरः 'समुदितः' । वैश्वाभिजितोः ( उत्तराषाढाभिजिन्नक्षत्रयोः ) नकुलः ( नकुलयोनिः ) तथैव चन्द्राब्जयोन्योः ( मृगशिररोहिण्योः ) अहिः ( सर्पःयोनिः ) 'समुदितः ॥ २५ ॥

अन्वयः—ज्येष्ठामैत्रभयोः ( ज्येष्ठानुराधयोः ) कुरंगः ( मृगयोनिः ) उदितः

( प्रोक्तः ) मूलार्द्रयोः श्वा ( कुक्कुरयोनिः) 'उदितः'। दितिसार्पयोः ( पुनर्वसुश्लेषानक्षत्रयोः ) मार्जारः 'निगदितः'। अथ मघायोन्योः ( मघापूर्वफाल्गुन्योः ) उन्दुरः ( मूषकयोनिः ) द्वीशभचित्रयोः (विशाखाचित्रयोः) व्याघ्रः (व्याघ्रयोनिः) अपिच अर्यम्णबुध्न्यर्क्षयोः ( उत्तराफाल्गुनीउत्तराभाद्रपदयोः ) गौः ( गौर्योनिः ) 'उदितः'। पादगयोः ( एकस्मिन् चरणे गतयोः उक्तनक्षत्रयोः परस्परं ) महावैरं 'स्यात्'। तत् त्यजेत्। अत्रातिवैरवैरोदासीनमैत्रातिमैत्रक्रमेण गुणविभागः। गोव्याघ्रादीनामतिवैरं तत्र गुणाभावः। शुनकमार्जारादीनां वैरं तत्रैको गुणः। अश्वमेषादीनामौदास्यं तत्र गुणद्वयम्। गोमेषादीनां मैत्रे तत्र गुणत्रयम्। एकयोनौ अतिमैत्रं तत्र गुणचतुष्टयम् ॥ २६ ॥

भाषा—अश्विनी और शतभिषा की अश्व, स्वाती और हस्त की भैंसा, धनिष्ठा और पूर्वभाद्रपद की सिंह, भरणी और रेवती की हस्ती, पुष्य और कृत्तिका की मेढ़ा, श्रवण और पूर्वाषाढ की वानर, उत्तराषाढ और अभिजित् की नकुल, मृगशिरा और रोहिणी की सर्प, ज्येष्ठा और अनुराधा की मृग, मूल और आर्द्रा की कुत्ता, पुनर्वसु और आश्लेषा की बिलाव, मघा और पूर्वफाल्गुनी की मूषक, विशाखा और चित्रा की व्याघ्र और उत्तरा फाल्गुनी तथा उत्तरा भाद्रपद की गौ योनि है। एक एक पाद में सब योनि का महावैर होता है जिसे योनिमेल में त्याग देना चाहिये ॥ २५॥२६ ॥

## ग्रहमैत्रीविचार।

मित्राणि द्युमणेः कुजेज्यशशिनःशुक्रार्कजौ वैरिणौ
सौम्यश्चास्य समो विधोर्बुधरवी मित्रे न चास्या द्विषट्।
शेषाश्चास्य समाः कुजस्य सुहृदश्चंद्रेज्यसूर्या बुधः
शत्रुः शुक्रशनी समौ च शशभृत्सूनोः सिताहस्करौ ॥२७॥
मित्रे चास्य रिपुः शशी गुरुशनिक्ष्माजाः समा गीष्पतेः
मित्राण्यर्ककुजेंदवो बुधसितौ शत्रू समः सूर्यजः।
मित्रे सौम्यशनी कवेः शशिरवी शत्रू कुजेज्यौ समौ
मित्रे शुक्रबुधौ शनेः शशिरविक्ष्माजा द्विषोऽन्यः समः ॥२८॥

अन्वयः—द्युमणेः ( सूर्यस्य ) कुजेज्यशशिनः ( भौमगुरुचन्द्राः ) मित्राणि

शुक्रार्कजौ ( शुक्रशनी ) वैरिणौ 'स्याताम्' । अस्य ( सूर्यस्य ) सौम्यः ( बुधः ) समः । विधोः ( चन्द्रस्य ) बुधरवी मित्रे च ( पुनः ) अस्य ( चन्द्रस्य ) द्विपत् न ( शत्रुर्नास्ति ) । शेषाः ( मंगलगुरुशुक्रशनयः ) अस्य समा एव । कुजस्य ( भौमस्य ) चन्द्रेज्यसूर्या ( चन्द्रगुरुसूर्याः ) सुहृदः ( मित्राणि ) बुधः शत्रुः । शुक्रशनी समौ । शशभृत्सूनोः ( बुधस्य ) सिताहस्करौ ( शुक्रसूर्यौ ; मित्रे । अस्य ( बुधस्य ) शशी ( चन्द्रः ) रिपुः ( शत्रुः ) । गुरुशनिक्ष्माजाः ( बृहस्पतिशनिभौमाः ) समाः । गीष्पतेः ( गुरोः ) अर्ककुजेन्दवो ( सूर्यभौमशशिनः ) मित्राणि । बुधसितौ ( बुधशुक्रौ ) शत्रू । सूर्यजः ( शनिः ) समः । कवेः ( शुक्रस्य ) सौम्यशनी ( बुधशनी ) मित्रे । शशिरवी शत्रू । कुजेज्यौ ( मंगलदेवगुरू ) समौ । शनेः शुक्रबुधौ मित्रे शशिरविक्ष्माजा द्विपः ( शत्रवः ) । अन्यः ( गुरुः ) समः ॥ २७ ॥ २८ ॥

भाषा—सूर्य के मंगल, बृहस्पति और चन्द्रमा मित्र, शुक्र और शनि शत्रु तथा बुध मित्र हैं। चन्द्रमा के बुध, सूर्य मित्र तथा शत्रु कोई नहीं है। मंगल के चन्द्रमा, बृहस्पति और सूर्य मित्र, बुध शत्रु, शुक्र तथा शनि सम हैं। बुध के शुक्र और रवि मित्र, चंद्रमा शत्रु और बृहस्पति, शनि एवं मंगल सम हैं। बृहस्पति के सूर्य मंगल और चन्द्रमा मित्र, बुध-शुक्र शत्रु तथा शनिश्चर सम हैं। शुक्र के बुध और शनि मित्र, चंद्रमा और सूर्य शत्रु तथा मंगल और बृहस्पति सम हैं। शनैश्चर के शुक्र और बुध मित्र, चंद्रमा-रवि और मंगल शत्रु और बुध सम है ॥ २७ ॥ २८ ॥

गणकूटविचार।

| ग्रहाः | सूर्य | चन्द्रमा | मंगल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|---|
| मित्र | चं.मं.गु. | र बु. | गु.र.चं. | र. शु. | र.च.मं. | बु. श | बु. शु. |
| सम | बुध | मं,गु.शु.श. | शु. श. | मं.गु श. | श. | मं. गु. | गु. |
| शत्रु | शु.श. | ❀ | बु. | चं. | बु. | र.चं | र.मंचं. |

रक्षोनरामरगणाः क्रमतो मघाहि-

वस्विन्द्रमूलवरुणानलतक्षराधाः।

पूर्वोत्तरात्रयविधातृयमेशभानि
मैत्रादितींदुहरिपौष्णमरुल्लघूनि ॥ २९ ॥
निजनिजगणमध्ये प्रीतिरत्युत्तमा स्या-
दमरमनुजयोः सा मध्यमा संप्रदिष्टा ।
असुरमनुजयोश्चेन्मृत्युरेव प्रदिष्टो
दनुजविबुधयोः स्याद्वैरमेकांततोऽत्र॥ ३० ॥

अन्वयः—एते क्रमतः रक्षोनरामरगणाः (राक्षस-मनुष्य-देवगणाः) 'भवन्ति' 'यथा'—मघाहिवस्विन्द्रमूलवरुणानलतक्षराधा (मघा, आश्लेषा, धनिष्ठा, मूल, शतभिषा, कृत्तिका, चित्रा, विशाखा, एतानि नक्षत्राणि रक्षोगणे कथितानि) पूर्वोत्तरात्रयविधातृयमेशभानि (एतानि नरगणमध्ये कथितानि) मैत्रादितीन्दुहरिपौष्णमरुल्घूनि (एतानि देवगणोक्तनक्षत्राणि) ॥ २९ ॥

अन्वयः—निजनिजगणमध्ये (स्वस्वगणे विद्यमानयोः वरकन्ययोः) अत्युत्तमा प्रीतिः स्यात् । सा (प्रीतिः) असुरमनुजयोः (देवमनुष्यगणयोः) मध्यमा सम्प्रदिष्टा (उक्ता)। असुरमनुजयोः (राक्षसमनुष्यगणयोः) मृत्युरेव सम्प्रदिष्टा । दनुजविबुधयोः (दैत्यदेवयोः) 'वरकन्ययोः' एकान्ततः अत्र वैरं 'स्यात्' ॥ ३० ॥

भाषा—मघा, आश्लेपा, धनिष्ठा, मूल, शतभिषा, कृत्तिका, चित्रा और विशाखा, नक्षत्र का राक्षस गण, तीनों पूर्वा, तीनों उत्तरा, रोहिणी, भरणी, आर्द्रा नक्षत्र का मनुष्य गण अनुराधा, पुनर्वसु, मृगशिरा, श्रवण, रेवती, स्वाती, अश्विनी, पुष्य और हस्त नक्षत्र का देवतागण संज्ञा है ॥२९॥ यदि एक ही गण के स्त्री पुरुष हों तो अति उत्तम प्रीति होती है। स्त्री देवतागण और पुरुष मनुष्यगण हो तो मध्यम प्रीति होती है। यदि एक असुरगण दूसरा मनुष्य गण हो तो मृत्यु होती है और दैत्य तथा देवतागण का विवाह हो तो महावैर होता है। जहां वैरभाव हो वहां गुण नहीं होता जहां एक ही गण हो वहाँ पर छः गुण होते हैं ॥३०॥

| | | वर | | |
|---|---|---|---|---|
| | | दे० | म० | रा० |
| वधू | दे० | ६ | ५ | १ |
| | म० | ६ | ६ | ० |
| | रा० | १ | ० | ६ |

### राशिकूटविचार ।

मृत्युः षट्काष्टके ज्ञेयोऽपत्यहानिर्नवात्मजे ।
द्विर्द्वादशे निर्धनत्वं द्वयोरन्यत्र सौख्यकृत् ॥ ३१ ॥

अन्वयः—षट्काष्टके ( स्त्रीपुरुषयोः षष्ठाष्टमराशित्वे सति ) मृत्युः 'ज्ञेयः' । नवात्मजे (नवमे पंचमे च) अपत्यहानिः । द्विर्द्वादशे निर्धनत्वं ( दारिद्र्यं स्यात् ) अन्यत्र (तृतीयैकादशे चतुर्थदशमे समसप्तमे वा) द्वयोः ( वरकन्ययोः ) सौख्यकृत् ( कल्याणकारि भवति ) ॥ ३१ ॥

भाषा—वर-कन्या की छठीं वा आठवीं राशि हो तो मृत्यु जानना और नवीं राशि हो तो सन्तान नष्ट हो दूसरी तथा बारहवीं राशि हो तो दरिद्रता हो और तीसरी, ग्यारहवीं वा चौथी हो तो सुखदायक विवाह होता है ॥३१॥

### दुष्टभकूट का परिहार ।

प्रोक्ते दुष्टभकूटके परिणयस्त्वेकाधिपत्ये शुभो-
ऽथो राशीश्वरसौहृदेपि गदितो नाड्यर्क्षशुद्धिर्यदा ।
अन्यर्क्षेशपयोर्वलित्वसखिते नाड्यर्क्षशुद्धौ तथा
ताराशुद्धिवशेन राशिवशता भावैर्निरुक्तो बुधैः ॥ ३२ ॥

अन्वयः—'स्त्रीपुरुषयोःद्वयोः' एकाधिपत्ये ( एकस्वामिनि सति ) दुष्टभकूटके [ षडष्टकादावपि ] प्रोक्तः परिणयः ( विवाहः ) शुभो गदितः । अन्यर्क्षेशपयोः वलित्वसखिते 'चेत् स्याताम्' तदा नाड्यर्क्षशुद्धौ तथा ताराशुद्धिवशेन राशिवशताभावे राशिवश्यत्वे च सति दुष्टभकूटकेपि बुधैः परिणयः निरुक्तः ॥ ३२ ॥

भाषा—यदि स्त्री-पुरुष की राशि के एक स्वामी हों तो दुष्ट भकूट ( अर्थात् छठीं आठवीं ) राशि में भी विवाह शुभ है और नक्षत्रों की नाड़ी शुद्धि हो तो भी दुष्टभकूट में विवाह शुभ होता है । आपस में षडष्टक राशियों में हो और राशियों के स्वामियों में मित्रता न हो और नवांशक के स्वामियों में मित्रता हो तो दुष्ट भकूट शुभ होता है । नक्षत्रों की नाड़ी शुद्ध हो और मित्रता में राशिवश्य का अभाव हो अर्थात् षडष्टक हो और राशिस्वामियों की शुद्धता हो तो भी पण्डितों ने विवाह शुभ कहा है ॥ ३२ ॥

गणकूटादि दोषों का परिहार।

मैत्र्यांराशिस्वामिनोरंशनाथद्वंद्वस्यापिस्याद्गणानां न दोषः।
खेटारित्वं नाशयेत्सद्भकूटं खेटप्रीतिश्चापि दुष्टं भकूटम् ॥ ३३ ॥

अन्वयः——राशिस्वामिनोः अंशनाथद्वंद्वस्यापि मैत्र्यां सत्यां गणानां दोषो न 'भवति'। सद्भकूटम् खेटारित्वम् नाशयेत्। खेटप्रीतिश्चापि दुष्टं भकूटम् नाशयेत् ॥ ३६ ॥

भाषा——स्त्री-पुरुष की राशियों के स्वामियों की मित्रता हो तथा राशिस्वामी से और नवमांश के स्वामी से मित्रता हो तो खेटगणों का दोष नहीं होता और सद्भकूट तीसरे तथा ग्यारहवें वैष्कृत ग्रहों को नाश करता है। इसी प्रकार ग्रहों की मित्रता दुष्ट भकूटका नाश करती है ॥३३॥

नाड़ीकूटविचार।

ज्येष्ठारौद्रार्यमाम्भःपतिभयुगयुगं दास्रभं चैकनाड़ी
पुष्येन्दुत्वाष्ट्रमित्रान्तकवसुजभंयोनिबुध्न्येचमध्या।
वाय्वग्निव्यालविश्वोडुयुगयुगमथोपौष्णभं चापरा स्या-
द्दपंत्योरेकनाड्यां परिणयनमसन्मध्यनाड्यां हि मृत्युः ॥३४॥

अन्वयः—ज्येष्ठारौद्रार्यमाम्भःपतिभयुगयुगं दास्रभं (अश्विनी च) एका नाडी स्यात्। पुष्येन्दुत्वाष्ट्रमित्रान्तकवसुजलभं योनिबुध्न्ये च मध्या नाड़ी स्यात्। वाय्वग्निव्यालविश्वोडुयुगयुगं अथो पौष्णभं च अपरा नाडी स्यात्। दम्पत्योः (कन्यावरयोः) एकनाड्यां परिणयनम् (विवाहः) असत् (अशुभं भवति)। मध्यनाड्यां (हि निश्चयेन) मृत्युः स्यात् ॥ ३४ ॥

भाषा——ज्येष्ठा, मूल, उत्तराफाल्गुनी, हस्त, आर्द्रा, पुनर्वसु, शतभिषा, पूर्वभाद्रपद और अश्विनी की आदि नाड़ी है। पुष्य, मृगशिरा, चित्रा, अनुराधा, भरणी, धनिष्ठा, पूर्वाषाढ, पूर्वाफाल्गुनी और उत्तराभाद्रपद की मध्यनाड़ी है। स्वाती, विशाखा, कृत्तिका, रोहिणी, आश्लेषा, मघा, उत्तराषाढ, श्रवण और रेवती की अन्त नाड़ी है। यदि वर कन्या की एक ही नाड़ी हो तो विवाह अशुभ है। मध्य नाड़ी में मृत्यु होती है। इससे विवाह में नाड़ीदोष प्रथम विचारणीय है ॥ ३४ ॥

पूर्व, मध्य और अन्तभागभोगी नक्षत्र ।

पौष्णेशशाक्राद्रसमूर्यनंदाः पूर्वार्धमध्यापरभागयुग्मम् ।
भर्त्ता प्रिया प्राग्युजिभे स्त्रिया स्यान्मध्ये द्वयोः प्रेम परे प्रियास्त्री॥३५॥

अन्वयः—पौष्णेशशाक्राद्रसमूर्यनन्दा पूर्वार्धमध्यापरभागयुग्मम् 'भवति'। प्राग्युजिभे स्त्रियाः भर्त्ता प्रियः स्यात् । मध्ये युजिभे द्वयोः प्रेम 'भवति'। परे युजिभे स्त्री नृणां प्रिया 'स्यात्' ॥ ३५ ॥

भाषा—-रेवती से छ नक्षत्र पूर्वभाग होते हैं। इनमें विवाह हो तो भर्त्ताप्रिय होती है। आर्द्रा से बारह नक्षत्र मध्यभाग होते हैं। इनमें विवाह होने से परस्पर प्रीति रहती है। ज्येष्ठा से नौ नक्षत्र अन्त भाग है, इनमें विवाह होने से स्त्री प्यारी होती है ॥३५॥

| | | | | |
|---|---|---|---|---|
| पुरुष | | आ | म | अ |
| | पु | ० | ५ | ५ |
| स्त्री | स्त्री | ० | ० | ५ |
| | | ५ | अ | ५ |

अकचटतपयशवर्गाः खगेशमार्जारसिंहशुनाम् ।
सर्पाखुमृगावीनां निजपंचमवैरिणामष्टौ ॥३६॥

अन्वयः—खगेशमार्जारसिंहशुनाम् ( गरुडविडालसिंहकुक्कुराणाम् ) सर्पाखु-मृगावीनां ( सर्पमूषकमेषाणां ) अष्टौ निजपंचमवैरिणाम् अकचटतपयशवर्गाः 'भवन्ति' ॥ ३६ ॥

भाषा—अवर्ग गरुड़, कवर्ग बिलाव, चवर्ग सिंह, टवर्ग कुत्ता, तवर्ग सर्प, पवर्ग मृग और शवर्ग मेष होता है । इनमें प्रत्येक वर्गका पाँचवाँ वर्ग वैरी होता है ॥ ३६ ॥

नक्षत्र और राशि की एकता का विचार ।

राश्यैक्ये चेद्भिन्नमृक्षं द्वयोः स्यान्नक्षत्रैक्ये राशियुग्मं तथैव ।
नाडीदोषो नो गणानां च दोषो नक्षत्रैक्ये पादभेदे शुभं स्यात् ॥३७॥

अन्वयः—द्वयोः ( कन्यावरयोः ) राश्यैक्ये चेत् ऋक्षं ( नक्षत्रं ) भिन्नं 'स्यात्तदा' नाडीदोषो गणानां च दोषो न 'स्यात्'। नक्षत्रैक्ये पादभेदे शुभं स्यात् ॥ ३७ ॥

भाषा--वर और वधू की एक राशि हो और नक्षत्र भिन्न हो अथवा एक नक्षत्र और एक राशि हो तो गणदोष नहीं होता। वर-बधुओं की राशि तथा नक्षत्र एक हो और चरणभेद हो तो विवाह अति शुभ होता है ॥ ३७ ॥

| रा | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|
| १ | ३ | ३ | १॥ | ३ | १॥ | ३ | १॥ | ३॥ | ३ |
| २ | ३ | ३ | १॥ | ३ | १॥ | ३ | १॥ | ३॥ | ३ |
| ३ | १॥ | १॥ | ० | १॥ | ० | १॥ | ० | १॥ | १॥ |
| ४ | ३ | ३ | १॥ | ३ | १॥ | ३ | १॥ | ३॥ | ३ |
| ५ | १॥ | १॥ | ० | १॥ | ० | १॥ | ० | १॥ | १॥ |
| ६ | ३ | ३ | १॥ | ३ | १॥ | ३ | १॥ | ३ | ३ |
| ७ | १॥ | १॥ | ० | १॥ | ० | १॥ | ० | १॥ | १॥ |
| ८ | ३ | ३ | १॥ | ३ | १॥ | ३ | १॥ | ३ | ३ |
| ९ | | | १॥ | ३ | १॥ | ३ | १॥ | ३ | |

नक्षत्र वशसे सेव्य-सेवक-फल।

सेव्याधमर्णयुवतीनगरादिभं चे-
त्पूर्वं हि भृत्यधनिभर्तृपुरादिसद्भात्।
सेवाविनाशधननाशनभर्तृनाश-
ग्रामादिसौख्यकृदिदं क्रमशः प्रदिष्टम् ॥३८॥

अन्वयः—भृत्यधनिभर्तृपुरादिसद्भात् सेव्याधमर्णनगरादिभं चेत्पूर्णं 'स्यात तदा' हि (निश्चयेन) सेवाविनाशधननाशनभर्तृनाशग्रामादिसौख्यकृत् इदं क्रमशः प्रदिष्टम् ॥ ३८ ॥

भाषा—स्वामी से नौकर का, धनी से ऋण लेने वाले का, स्त्री से पतिका, गांव के राजा से प्रजा का और दूसरा नक्षत्र हो तो क्रमानुसार सेवा, नाश, धननाश, भर्ताका नाश और ग्रामादि सुख का नाश जाने ॥३८॥

राशिस्वामियों के नवमांश की विधि ।

**कुजशुक्रसौम्यशशिसूर्यचन्द्रजाः कविभौमजीवशनिसौरयो गुरुः ।**
**इह राशिपाः क्रियमृगास्यतौलिकेन्दुभतोनवांशविधिरुच्यते बुधैः३९**

अन्वयः—कुजशुक्रसौम्यशशिसूर्यचन्द्रजाः ( मङ्गलशुक्रबुधचन्द्रसूर्यबुधाः ) कविभौमजीवशनिसौरयः गुरुश्च 'क्रमशः' इह राशिपाः ( राशीनां स्वामिनः ) भवन्ति । क्रियमृगास्यतौलिकेन्दुभतः ( मेषमकरतुलाकर्कभतः ) बुधैः [विद्वद्भिः] नवांशविधिः उच्यते ॥ ३९ ॥

भाषा—मङ्गल, शुक्र, बुध, चन्द्रमा, सूर्य, बुध, शुक्र, मङ्गल, बृहस्पति और शनि, ये राशियों के स्वामी हैं। मेष का नवमांश मेष से, वृष का मकर से, मिथुन का तुला से, कर्क का कर्क से, सिंह का मेष से और मकर का कन्यादि से क्रमानुसार नवमांश जानना चाहिये ॥ ३९ ॥

**समगृहमध्ये रविशशिहोरा ।**
**विषमभमध्ये रविशशिनोः सा ॥ ४० ॥**

अन्वयः—समगृहमध्ये शशिरविहोरा 'स्यात्' । विषमभमध्ये रविशशिनोः सा होरा 'स्यात्' । अयं भावः यत् पञ्चदशभोगात्मिका एका होरा स्यात् ततः समराशिमध्ये प्रथमा चन्द्रस्य द्वितीया सूर्यस्य विषमराशिमध्ये प्रथमा रवेः अपरा चन्द्रस्येत्यर्थः ॥ ४० ॥

भाषा—समराशि में पहला पन्द्रह भाग चन्द्रमा की होरा, दूसरा पन्द्रह भाग सूर्य की होरा और विषम राशिमें प्रथम सूर्य की और दूसरी चन्द्रमा की होरा होती है ॥ ४० ॥

**शुक्रज्ञजीवशनिभूतनयस्य बाण-**
**शैलाष्टपंचविशिखाः समराशिमध्ये ।**
**त्रिंशांशको विषमभे विपरीतमस्माद्-**
**द्रेष्काणकाः प्रथमपञ्चनवाधिपानाम् ॥ ४१ ॥**

अन्वयः—समराशिमध्ये शुक्रज्ञजीवशनिभूतनयस्य वाणशैलाष्टपञ्चविशिखाः ( पञ्चांशानां शुक्रः सप्तानां बुधः अष्टानां गुरुः ततः पंचानां शनिः ततः पंचानां शनिः ततः पंचानां शनिः ततः पञ्चांशानां भौमः स्वामी स्यात् ) विषमभे तु अस्मात् विपरीतं (प्रतिकूलं) त्रिंशांशकः 'स्यात्' प्रथमपञ्चनवाधिपानां द्रेष्काणकाःस्युः ॥४१॥

भाषा—शुक्र, बुध, बृहस्पति, शनि और मङ्गल इन पांचों ग्रहों का पांच सात आठ पाँच पांच इस क्रमसे त्रिंशांश जानना। जैसे शुक्र पांच अंशोंका स्वामी, बुध सात अंशोंका स्वामी और विषम राशियों का विपरीत जाने। जैसे प्रथम पांचों का मंगल, फिर पांचोंका शनिश्चर इसी प्रकार जानो। दशांश को द्रेष्काण कहते हैं। सो प्रथम द्रेष्काण निज अधीश का, दूसरा पंचमराशि के स्वामी का और तीसरा नवम राशि के स्वामी का होता है ॥ ४१ ॥

स्याद्द्वादशांश इह राशित एव गेहं
होराथ दृक्कनवमांशकसूर्यभागाः ।
त्रिंशांशकश्च षडिमे कथितास्तु वर्गाः
सौम्यैः शुभं भवति चाशुभमेव पापैः ॥ ४२ ॥

अन्वयः—इह षड्वर्गे द्वादशांशराशित एव गेहं अथ होरा स्यात्। दृक्कनवमांशकसूर्यभागाः त्रिंशांशकाश्च इमे षड्वर्गाः कथिताः। तु ( पुनः ) सौम्यैः ( शुभग्रहैः ) शुभं 'भवति' पापैः ( पापग्रहैः ) अशुभं एव भवति ॥ ४२ ॥

भाषा—निज राशि से अढ़ाई भाग को द्वादशांश कहते हैं। जैसे मेष का द्वादशांश मेष आदि से वृषका वृषादि से। गेहहोरा दृक्क, नवमांश, द्वादशांश तथा त्रिंशांश, ये हैं। जो षड्वर्ग कहे जाते हैं और सौम्य ग्रहों को अशुभ हैं ॥ ४२ ॥

ज्येष्ठापौष्णभसार्पभान्त्यघटिके युग्मं च मूलाश्विनी
पित्र्यादौ घटिकाद्वयं निगदितं तद्भस्य गण्डान्तकम् ।
कर्काल्यंडजभांततोऽर्धघटिका सिंहाश्च मेषादिगाः
पूर्णान्ताद्धटिकात्मकं त्वशुभदं नन्दातिथेश्चादिमम् ॥४३॥

अन्वयः - ज्येष्ठापौष्णभसार्पभान्त्यघटिकायुग्ममू च ( पुनः ) मूलाश्विनीपित्र्यादौ ( मघादौ च ) घटिकाद्वयं तद्भस्य गण्डान्तकं निगदितं (प्रोक्तम्) । ततः कर्काल्यण्डजभात् अर्धघटिका सिंहाश्च मेषादिगा पूर्णान्तात् घटिकात्मकं नन्दातिथेश्च आदिमं गण्डान्तं अशुभं स्यात् ।। ४३ ।।

भाषा--ज्येष्ठा, रेवती और आश्लेषा की दो घड़ी और मूल, अश्विनी तथा मघा के आदि की दो घड़ी गण्डान्त है । इसे नक्षत्रगण्डान्त कहते हैं । कर्क, वृश्चिक तथा मीन के अन्त की आधी घड़ी और सिंह एवं मेष के आदि की आधी घड़ी गंडांत है । यह लग्नगंडांत कहलाता है। पंचमी, दशमी और पूर्णिमा के अंत की एक २ घड़ी और प्रतिपदा, षष्ठी तथा एकादशी के आदि की एक २ घड़ी गंडांत होती है जो तिथिगंडांत कहलाती है । वह शुभ कर्म में अशुभ फल देती है ।। ४३ ।।

लग्नात्पापावृज्वनृजू व्ययार्थस्थौ यदा तदा ।
कर्तरीनाम स ज्ञेया मृत्युदारिद्र्यशोकदा ।। ४४ ।।

अन्वयः—यदा लग्नात् 'सकाशात्' पापौ ( पापग्रहौ ) ऋज्वनृजू व्ययार्थस्थौ तदा सा कर्तरीनाम ज्ञेया । सा ( कर्तरी ) मृत्युदारिद्र्यशोकदा स्यात् ॥ ४४ ॥

भाषा—जिस लग्न से पापग्रह ( सीधा चलनेवाला ) बारहवें स्थान में हो और वक्री होकर दूसरे स्थान में हो तो उसे कर्त्तरीदोष कहते हैं । वह मृत्यु, दारिद्र्य और शोक का देने वाला होता है ।। ४४ ।।

चंद्रसूर्यादिसंयुक्ते दारिद्र्यं मरणं शुभम् ।
सौख्यं सापत्नवैराग्यं पापद्वययुते मृतिः ।। ४५ ।।

अन्वयः—चन्द्रे सूर्यादिसंयुक्ते दारिद्र्यं मरणं शुभं च भवति । सौख्यं सापत्नवैराग्यं 'स्यात्' । पापद्वययुते चन्द्रे मृतिः ( मृत्युरेव ) 'स्यात्' ॥ ४५ ॥

भाषा--सूर्य से युक्त चंद्रमा दरिद्री और भौमयुक्त चंद्रमा मरण करते हैं । बुधयुक्त शुभप्रद हैं, वृहस्पतियुक्त सौख्य देते हैं, शुक्रयुक्त शत्रुता करते हैं, शनियुक्त चन्द्रमा वैराग्य बढ़ाते हैं और यदि चन्द्रमा दो पापग्रह से युक्त हो तो मृत्यु करते हैं ।। ४५ ।।

जन्मलग्नोभयोर्मृत्यू राशौ नेष्टः करग्रहः।
एकाधिपत्ये राशीशे मैत्रे वा नैव दोषकृत् ॥ ४६ ॥

अन्वयः—जन्मलग्नोभयोर्मृत्युराशौ करग्रहः ( विवाहः ) नेष्टः ( निषिद्धः ) राशीशे एकाधिपत्ये ( स्वाम्यैक्ये ) 'तयोः' मैत्रे वा सति नैव दोषकृत 'स्यात्' ॥ ४६ ॥

भाषा--जन्मलग्न जन्मराशि से आठवीं राशि में हो तो विवाह श्रेष्ठ नहीं है। जन्मराशि और जन्मलग्न में किसी का और विवाह लग्नका एक ही स्वामी हो और राशीश्वरोंकी मित्रता हो तो दोष नहीं है ॥४६॥

मीनोक्षकर्कालिमृगस्त्रियोऽष्टमं लग्ने यदा नाष्टमगेहदोषकृत्।
अन्योन्यमित्रत्ववशेन सा वधूर्भवेत्सुतायुर्गृहसौख्यभागिनी ॥४७॥

अन्वयः—मीनोक्षकर्कालिमृगस्त्रियः ( मीनवृषकर्कवृश्चिकमकरकन्याः ) 'एते राशयः' यदा अष्टमं लग्नं तदा अष्टमगेहं दोषकृत् न 'भवेत्'। अन्योन्य-मित्रत्ववशेन सा ( वधूः ) सुतायुर्गृहसौख्यभागिनी 'स्यात्' ॥ ४७ ॥

भाषा—मीन, मेष, कर्क, वृश्चिक, मकर और कन्या राशि यदि अष्टम लग्न में हों तो अष्टमलग्न का दोष नहीं होता। आपस में ग्रहों की मित्रता हो तो कन्या तथा पुत्र आयु और सौख्य भोगनेवाला होता है ॥ ४७ ॥

लग्न स्थित अष्टम स्थान के स्वामी का विचार।

मृतिभवनांशो यदि च विलग्ने तदधिपतिर्वा न शुभकरः स्यात्।
व्ययभवनं वा भवति तदंशस्तदधिपतिर्वा कलहकरः स्यात् ॥४८॥

अन्वयः—मृतिभवनांशो ( अष्टमे लग्ने तन्नवांशो वा यदि विलग्ने स्यात् तदधिपतिः वा विलग्ने स्यात् तदा न शुभकरः। व्ययभवनम् ( जन्मजन्मराशि-भ्यां द्वादशभवनम् ) तदधिपतिः तदंशो वा भवेत् 'तदा' कलहकरः 'स्यात्' ॥४८॥

भाषा--यदि आठवें स्थान का नवमांश लग्न में हो अथवा लग्न का स्वामी हो और शुभप्रद भी न हो, जन्मलग्न तथा जन्मराशि के साथ द्वादशभवन में हो अथवा व्यय भवनका अंश उसका स्वामी हो तो कलहकारी होता है ॥ ४८ ॥

## विषघटी का दोषविचार।

खरामतोंत्यादितिवह्निपित्र्यभे खवेदतः के रदतश्च सार्पभे ।
खवाणतोश्वधृतितोऽर्यमांबुपे कृते भगत्वाष्ट्रभविश्वजीवभे ॥ ४९ ॥
मनोर्द्विदैवानिलसौम्यशाक्रभे कुपक्षतः शैवकरेष्टतोऽजभे ।
युगाश्वितो बुधन्यभतोययाम्यभे खचंद्रतो मित्रभवासवश्रुतौ ॥५०॥
मूलेंगबाणाद्विषनाडिकाः कृता वर्ज्याः शुभेऽथोविषनाडिकाध्रुवाः
निघ्ना भभोगेन खतर्कभाजिताः स्फुटाभवेयुर्विषनाडिकास्तथा ।५१।

अन्वयः—अन्त्यादितिवह्निपित्र्यभे (रेवतीपुनर्वसुकृत्तिकामघानक्षत्रे) खरामतः ( त्रिंशद्घटिकोत्तरं ) के ( रोहिण्याम् ) खवेदतः ( चत्वारिंशद्घटिकोत्तरं ) सार्पभे ( आश्लेषायाम् ) च रदतः, अश्वे खबाणतः अर्यमाम्बुपे धृतितः भगत्वाष्ट्रभविश्वजीवभे कृते ( विंशद्घटिकोत्तरम् ) । द्विदैवानिलसौम्यशाक्रभे मनोः । शैवकरे कुपक्षतः । अजभे अष्टितः । बुध्न्यभतोययाम्यभे युगाश्वितः । मित्रभवासवश्रुतौ खचन्द्रतः । मूले अङ्गबाणात् । 'एता' विषनाडिकाः कृताः । अथो शुभे 'कार्ये' विषनाडिका ध्रुवा वर्ज्याः तथा विषनाडिकाध्रुवाः भभोगेन निघ्ना तथा खतर्कभाजिताः स्फुटा विषनाडिका भवेयुः ॥ ४९ ॥ ५० ॥ ५१ ।

रेवती, पुनर्वसु, कृत्तिका और मघा इन नक्षत्रों में ३० घड़ी के अन्त की चार घड़ी विषघड़ी कहलाती है । रोहिणी में ४० घड़ी पीछे चार घड़ी, आश्लेषा में ३२ पीछे चार घड़ी, अश्विनी में ५० घड़ी पीछे, भरणी और शतभिषा में १८ अठारह घड़ी पीछे पूर्वाफल्गुनी, चित्रा, उत्तराषाढ़ और पुष्य में २० घड़ी पीछे विशाखा, स्वाती, मृगशिरा और ज्येष्ठा में १४ घड़ी पीछे चार घड़ी आर्द्रा तथा हस्त में २१ घड़ी पीछे चार घड़ी, श्रवण में १६ घड़ी पीछे चारघड़ी उत्तराभाद्रपद, पूर्वाषाढ और भरणी में दश घड़ी पीछे चारघड़ी ॥५०॥ मूल नक्षत्रों में ५६ घड़ी के बाद विषनाड़ी होती है । यह विषनाड़ी शुभकर्म में अतिनिंदत है । विषनाड़ी की ध्रुवा को इष्ट नक्षत्र को भभोग से गुणा करे । फिर साठ का भाग देवे तैसे ही विषनाड़ी का भी भभोग से गुणा करे । साठ भाग देने से जो लब्धि हो सोई विषनाडी का स्पष्ट जानना चाहिये ॥५१॥

नक्षत्रविषघटिकाचक्रम् ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अ. | भ. | कृ. | रो. | मृ. | आ. | पु. | पु. | अश्ले. |
| ५० | २४ | ३० | ४० | १४ | २१ | ३० | २० | ३२ |
| म. | पू. | उ. | ह. | चि. | स्वा. | वि. | अनु. | ज्ये. |
| ३० | २० | १८ | २१ | २० | १४ | १४ | १० | १४ |
| मू. | पू. षा. | उ. षा. | श्र. | ध. | श. | पू. भा. | उ. भा. | रे. |
| ५६ | २४ | २० | १० | १० | १८ | १६ | २४ | ३० |

तिथिविषघटिकाचक्रम् ।

| | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | ३० | ति. |
| १५ | ५ | ८ | ७ | ७ | ११ | ४ | ८ | ७ | १० | ३ | १३ | १४ | ८ | ७ | ० | घ. |

वारविषघटिकाचक्रम् ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | बृ. | शु. | श. | वार | ० |
| २० | २ | १२ | १० | ७ | ५ | २५ | घ. | ० |

दिनमुहूर्त्तस्वामीसंज्ञा ।

गिरिशभुजगमित्राःपित्र्यवस्वंबुविश्वे-
भिजिदथ च विधातापीन्द्रइन्द्रानलौ च ।
निरृतिरुदकनाथोप्यर्यमाथोभगःस्युः
क्रमश इह मुहूर्ता वासरे बाणचन्द्राः ॥ ५२ ॥

अन्वयः—गिरिशभुजगमित्राः पित्र्यवस्वम्बुविश्वे अभिजित् अथ च विधाता-इन्द्रानलौ च निरृतिः उदकनाथः अर्यमा अथोभगः, इह क्रमशः वासरे (दिवसे) बाणचन्द्रा ( पञ्चदश ) मुहूर्ताः स्युः ॥ ५२ ॥

भाषा—दिन में शिव, भुजग, मित्र, पितृ, वसु, जल, विश्वेदेव, अभिजित्, विधाता, इन्द्र, अग्नि, निर्ऋति, उदकनाथ, अर्यमा, भग ये पन्द्रहों मुहूर्त्तों के स्वामी हैं ॥ ५२ ॥

रात्रिके मुहूर्त्तस्वामी की संज्ञा ।

शिवोऽजपादादष्टौ स्युर्भेशा अदितिजीवकौ ।
विष्ण्वर्कत्वाष्ट्रमरुतो मुहूर्त्ता निशि कीर्त्तिताः ॥ ५३ ॥

अन्वयः—शिवः अजपादात् अष्टौ ( यथा, अजपादः अहिर्बुध्न्यः पूषा अश्विनौ यमः अग्निः ब्रह्मा सोम इत्यष्टौ ) भेशाः ( मुहूर्त्तेशाः ) स्युः अदितिजीवकौ विष्ण्वर्कत्वाष्ट्रमरुतः निशि मुहूर्ताः कीर्तिताः ॥ ५३ ॥

भाषा—रात्रि के शिव अजपाद अदिति गुरु विष्णु अर्क त्वष्टा मरुत ये आठ मुहूर्त्त के स्वामी होते हैं ॥ ५३ ॥

दिनरात्रिमुहूर्त्तचक्रम् ।

| | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| दि | आ | आ | अ | अ | ० | भ | ध | पूषा | उषा | अ | रो. | ज्ये. | वि. | मू. | श. | उ. | पू. |
| मु. | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १५ | |
| र. | आ | पू | उ. | रे. | अ. | भ. | कृ. | रो. | म. | पु | पु | श्र. | ह. | चि. | स्वा. | | |
| मु० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५० | | |

सूर्यादि वारों में मुहूर्त्त ।

रवावर्यमा ब्रह्म रक्षश्च सोमे कुजे वह्निपित्र्ये बुधेचाभिजित्स्यात् ॥
गुरौ तोयरक्षो भृगौ ब्रह्मपित्र्ये शनावीशसार्पौ मुहूर्ता निषिद्धाः ५४

अन्वयः—रवौ अर्यमा ( भरणी ) सोमे ब्रह्मरक्षः, कुजे वह्निपित्र्ये बुधे च च अभिजित् स्यात् । गुरौ तोयरक्षौ, भृगौ ब्राह्मपित्र्ये, शनौ ईशसार्पौ 'एते' मुहूर्ताः निषिद्धाः स्युः ॥ ५४ ॥

भाषा—रविवार को अर्यमा, सोमवार को ब्रह्म और राक्षस, मंगल को अग्नि तथा पितर, बुधवार को अभिजित्, वृहस्पति को जल इन वारों के ये मुहूर्त निषिद्ध हैं ॥५४॥

विवाह में विहित नक्षत्र आदि और अभिजित् का विचार।

निर्वेधैः शशिकरमूलमैत्र्यपित्र्य-
ब्रह्मांत्योत्तरपवनैः शुभो विवाहः।
रिक्तामारहिततिथौ शुभेह्नि वैश्व
प्रांत्यांघ्रिः श्रुतितिथिभागतोऽभिजित् स्यात्॥ ५५॥

अन्वयः—शशिकरमूलमैत्रपित्र्यब्राह्मान्त्योत्तरपवनैः निर्वेधैः विवाहः शुभः 'स्यात्'। रिक्तामारहिततिथौ शुभेऽह्नि वैश्वप्रान्त्याङ्घ्रिश्रुतितिथिभागतः अभिजित् 'स्यात्'॥ ५५॥

भाषा—मृगशिरा, हस्त, मूल, अनुराधा, रोहिणी, रेवती, तीनों उत्तरा और स्वाती वेध से रहित इन नक्षत्रों में और रिक्ता चौथ नवमी चतुर्दशी (और अमावस्या) रहित तिथियों और शुभ वारों में विवाह करना शुभ है। उत्तराषाढ़ के चौथे और श्रवण के पहिले चरण में अभिजित् रहता है॥ ५५॥

नक्षत्रवेधविचार।

वेधोऽन्योन्यमसौ विरिंच्यभिजितोर्याम्यानुराधर्क्षयो-
र्विश्वेन्द्वोर्हरिपित्र्ययोर्ग्रहकृतो हस्तोत्तराभाद्रयोः।
स्वातीवारुणयोर्भवेन्निर्ऋतिभादित्योस्तथोपान्त्ययोः
खेटे तत्र गते तुरीयचरणाद्योर्वा तृतीयद्वयोः॥५६॥

अन्वयः—विरिञ्च्यभिजितोः याम्यानुराधर्क्षयोः। विश्वेन्दोः हरिपित्र्ययोः, हस्तोत्तराभाद्रयोः स्वातीवारुणयोः, निर्ऋतिभादित्योः तथा उपान्त्ययोः असौ अन्योन्यं (परस्परं) ग्रहकृतो वेधो भवेत्। तत्र तुरीयचरणद्वयोः वा तृतीयद्वयोः गते खेटे 'परस्परं' वेधो 'भवेत्'॥ ५६॥

भाषा—रोहिणी और अभिजित् का, भरणी और अनुराधा का, उत्तराषाढ़ और मृगशिरा का, श्रवण और उत्तराभाद्रपदका, स्वाती और शतभिषा का, मूल और पुनर्वसुका, उत्तराफाल्गुनी और रेवती का वेध है। चौथे चरण तथा प्रथम चरण के साथ और दूसरे चरण का तीसरे चरण के साथ वेध जानना चाहिए॥ ५६॥

कृ० रो० मृ० आ० पु० पु० अ०

भ० अ० रे० उ० पू० श० ध० — म० पू० उ० ह० चि० स्वा० वि०

श्र० अ० उ० पू० मू० ज्ये० अनु०

सप्तशालाकाकाचक्रकथनम् ।

शाक्रेऽब्जे शतभानिले जलशिवे पौष्णार्यमर्क्षेवसु-
द्वीशे वैश्वसुधांशुभे द्वयभगे सार्पानुराधे मिथः ।
हस्तोपांत्यमुभे विधातृविधिभे मूलादितित्वाष्ट्र-
भाजांघ्री याम्यमघे कृशानुहरिभे विद्धे कुभृद्रेखिके ॥५७॥

अन्वयः—कुभृद्रेखिके ( सप्तशलाकाचक्रे ) शाक्रेज्ये ( ज्येष्ठापुष्यनक्षत्रे ) शतभानिले, जलशिवे, पौष्णार्यमर्क्षे, वसुद्वीशे, वैश्वसुधांशुभे, हयभगे, सार्पानुराधे, भस्योपान्तिमभे, विधातृविधिभे, मूलादितित्वाष्ट्रभेऽजांघ्री, याम्यमघे कृशानुहरिभे, ( परस्परं ) विद्धे ज्ञेये ॥ ५७ ॥

भाषा—ज्येष्ठा और पुष्यका, शतभिषा और स्वाती का, पूर्वाषाढ़ और आर्द्रा का, रेवती और उत्तराफाल्गुनी का, धनिष्ठा और विशाखा का, उत्तराषाढ़ और मृगशिरा का, अश्विनी और पूर्वा फाल्गुनी का, रोहिणी और अभिजित् का, मूल और पुनर्वसुका, चित्रा और पूर्वाभाद्र पद का, भरणी और मघा का, कृत्तिका और श्रवण का सप्तशलाक चक्रके अनुसार वेध होता है । दीपिका में विस्तारपूर्वक इसका फल लिखा है ॥५७ ॥

कृ· रो· मृ· आ· पु· पु· ऽऽश्ले·

भ· अ· रे· उ· पू· श· ध· — म· पू· उ· ह· चि· स्वा वि·

श्र·अ. उ· पू· मू· ज्ये·ऽनु

### क्रूरग्रह से दूषितादि दोषका परिहार।

ऋक्षाणि क्रूरविद्धानि क्रूरभुक्तादिकानि च।
भुक्त्वा चन्द्रेण मुक्तानि शुभार्हाणि प्रचक्षते ॥ ५८ ॥

अन्वयः—क्रूरविद्धानि, क्रूरभुक्तादिकानि च ऋक्षाणि 'यदि चन्द्रेण' भुक्त्वा मुक्तानि, 'चेत्तदा तानि' शुभार्हाणि (विवाहादौ योग्यानि) प्रचक्षते कथयन्ति॥५८॥

भाषा–क्रूरग्रह से विद्ध तथा छूटे हुये, क्रूरग्रह जिसपर प्राप्त होने वाले हों और उत्पातों में दूषित नक्षत्र चन्द्रमा ने भोगकर छोड़ दिया हो तो शुभ होते हैं ॥ ५८ ॥

### लत्तादोष का प्रमाण।

ज्ञराहुपूर्णेन्दुसिताः स्वपृष्ठे भं सप्तगोजातिशरैर्मितं हि।
संलत्तयंतेर्कशनीज्यभौमाः सूर्याष्टतर्काग्निमितं पुरस्तात् ॥५९॥

अन्वयः—सप्तगोजातिशरैर्मितं भं ( सप्तनवपंचसंख्याकं नक्षत्रं ) ज्ञराहु-पूर्णेन्दुसिताः हि ( निश्चयेन ) स्वपृष्ठे संलत्तयन्ते। सूर्याष्टतर्काग्निमितं भं ( द्वाद-शाष्टमषष्ठतृतीयसंख्याकं नक्षत्रं ) अर्कशनीज्यभौमाः ( सूर्यशनिगुरुभौमाः ) पुरस्तात् ( अग्रे ) संलत्तयन्ते ॥ ५९ ॥

भाषा--बुध अपने नक्षत्र से सातवें नक्षत्र पर, राहु अपने नक्षत्र से आगेके नवें नत्त्र पर, चन्द्रमा बाईसवें नक्षत्र पर, शुक्र अपने पीछे वाले पांचवें नक्षत्र पर, सूर्य आगे के बारहवें नक्षत्र पर, शनैश्चर आगे के आठवें नक्षत्र पर, वृहस्पति आगे के छठें नक्षत्र पर और मंगल आगेके तीसरे नक्षत्र पर लात मारते हैं। यही लत्तायोग कहलाता है ॥ ५९ ॥

### पातदोषविचार।

हर्षणवैधृतिसाध्यव्यतिपातगंडशूलयोगानाम्।
अन्ते यन्नक्षत्रं पातेन निपातितं तत् स्यात् ॥ ६० ॥

अन्वयः—हर्षणवैधृतिसाध्यव्यतीपातकगण्डशूलयोगानाम् अन्ते यन्नक्षत्रं 'स्यात्' तत् ( नक्षत्रं ) पातेन ( चंडीशचंडायुधाख्येन ) निपातितं 'स्यात्' ॥६०॥

भाषा--हर्षण, वैधृति, साध्य, व्यतीपात, गंड और शूल इन योगों के अन्त में जो नक्षत्र हो सो पातदोष से दूषित कहलाता है ॥ ६० ॥

## महापातदोषविचार ।

पंचास्याजौ गोमृगौ तौलिकुंभौ कन्यामीनौ कर्क्यली चापयुग्मे ।
तत्रान्योन्यं चन्द्रभान्वोर्निरुक्तं क्रान्तेः साम्यं नो शुभं मंगलेषु ॥६१॥

अन्वयः—पंचास्याजौ ( सिंहमेषौ ) गोमृगौ ( वृषमकरौ ) तौलिकुंभौ, कन्यामीनौ, कर्क्यली, चापयुग्मे, 'व्युत्क्रमेणावस्थितयोः' चन्द्रभान्वोः क्रान्तेः साम्यं निरुक्तम् । तत् ( साम्यम् ) मङ्गलेषु ( शुभकामेषु ) नो शुभं 'भवति' ॥ ६१ ॥

| क्रांति | ३ | १ | २ | साम्य |
|---|---|---|---|---|
| ११ | | | | ७ |
| १२ | | | | ६ |
| ८ | | | | ४ |
| | ९ | ५ | १० | |

भाषा—सिंह, मेष, वृष, मकर, तुला, कुम्भ, कन्या मीन, कर्क, वृश्चिक, धन और मिथुन राशियों पर चन्द्रमा और सूर्य एक रेखापर स्थित हों तो क्रांतिसाम्य दोष होता है, जो सब शुभ कार्यों में वर्जित है ॥ ६१ ॥

## खर्जूरदोषविचार ।

व्याघातगंडव्यतिपातपूर्वे शूलांत्यवज्रे परिघातिगंडे ।
एकार्गलाख्यो ह्यभिजित्समेतो दोषः शशी चेद्विषमर्क्षगोर्कात् ॥६२॥

अन्वयः—व्याघातगण्डव्यतिपातपूर्वे शूलान्त्यवज्रे परिघातिगण्डे योगे विरुद्धे 'सति' अर्कात ( सूर्यनक्षत्रात् ) शशी ( चन्द्रः ) अभिजित्समेतः विषमे (विषमसंख्यके नक्षत्रे) 'स्यात्तदा' खार्जूरं ( खार्जूराख्यो दोषः स्यात्) ॥ ६२ ॥

भाषा—व्याघात, गंड, व्यतीपात, विष्कुम्भ, शूल, वैधृति, वज्र, परिघ और अतिगंड योगों में से जिस दिन कोई योग हो उस दिन जिस नक्षत्र पर सूर्य हों उस नक्षत्र से अभिजित् तक गिने, जिसदिन चन्द्रमा विषम नक्षत्र पर हो, उसी दिन खार्जूर तथा एकार्गल दोष जानना चाहिये ॥६२॥

## उपग्रहदोषविचार ।

शराष्टदिक्शक्रनगातिधृत्यस्थितिर्धृतिश्च प्रकृतेश्च पंच ।
उपग्रहाः सूर्यभतोब्जताराः शुभा न देशे कुरुवाह्लिकानाम् ॥६३॥

अन्वयः—सूर्यभतः ( सूर्याक्रान्तनक्षत्रात् ) अब्जताराः ( चन्द्रनक्षत्राणि ) शराष्टदिक्शक्रनगातिधृत्यः ( पंचमाष्टमदशचतुर्दशसप्तअष्टादशैकोनविंशतयः ) तिथिः धृतिः च ( पुनः ) प्रकृतेः पञ्च, ( एताः संख्याः स्युश्चेत्तदा ) उपग्रहाः ( उपग्रहनामधेयाः ) दोषाः 'स्युः'। ते कुरुवाह्लिकानां देशे शुभा न भवन्तीत्यर्थः ॥

भाषा—पांचवें, आठवें, दसवें, चौदहवें, सातवें, पन्द्रहवें, अठारहवें, इक्कीसवें, बाईसवें, तेईसवें, चौबीसवें और पच्चीसवें स्थान के नक्षत्र पर सूर्य हों तो वह उपग्रह दोष होता है। यह कुरु और बाह्लीक देश में अशुभ है ॥ ६३ ॥

| | १ | |
|---|---|---|
| २७ | | २ |
| २६ | | ३ |
| २५ | | ४ |
| २४ | | ५ |
| २३ | | ६ |
| २२ | | ७ |
| २१ | | ८ |
| २० | | ९ |
| १९ | | १० |
| १८ | | ११ |
| १७ | | १२ |
| १६ | | १३ |
| १५ | | १४ |
| | ० | |

### पात, उपग्रह और लत्ता का अपवाद और अर्धयाम

पातो ग्रहलत्तासु नेष्टोंघ्रिखेटपत्समः ॥ वारस्त्रिघ्नोष्टभिस्तष्टः सैकः स्यादर्धयामकः ॥ ६४ ॥

अन्वयः—पातो ग्रहलत्तासु खेटपत्समः ( ग्रहचरणतुल्यः ) अंघ्रिः चरणः नेष्टः। वारः त्रिघ्नअष्टभिस्तष्टः सैकः स्यात्तदा अर्धयामकः त्रिघ्नः दोषः 'स्यात्'।

भाषा—पात, उपग्रह और लत्ता ये तीन दोष हैं। जिस नक्षत्र के किसी चरण पर कोई ग्रह हो तो वह चरण श्रेष्ठ नहीं है। वारके अंकको तीनसे गुणा करे और आठ का भाग देने से जो अंक बचे उसमें एक जोड़ दे तो उतने समय को अर्धयाम कहते हैं ॥६४॥

### कुलिकदोषविचार।

शक्रार्कदिग्वसुरसाब्ध्यः शिवनः कुलिका रवेः।
रात्रौ निरेकास्तिथ्यंशाशनौ चांत्योपि निंदितः ॥ ६५ ॥

अन्वयः—रवेः (रविमारभ्य सर्ववारेषु) शक्रार्कदिग्वसुरसाब्ध्यश्विनः कुलिकाः ते रात्रौ निरेकाः 'कार्याः' शनौ तु अन्त्योऽपि ( रात्रेः पञ्चदशापि कुलिकाः ) एते सर्वे निन्दिताः 'सन्ति' ॥ ६५ ॥

भाषा—रविवारके दिन तथा रात्रि में चौदहवां मुहूर्त्त, चन्द्रवार को दिनमें बारहवां, रात्रि में ग्यारहवां मुहूर्त्त, मंगल को दिन में दसवां, रात्रि में नवां मुहूर्त्त, बुधवार को दिन में आठवां और रात्रि में सातवां मुहूर्त्त, वृहस्पति को दिन में छठां और रात्रि में पांचवां मुहूर्त्त, शनिवार को दिनमें दूसरा और रात्रि में पहिला मुहूर्त कुलिक कहाता है। दिन के पंद्रहवें भाग में कुलिक होता है ॥ ६५ ॥

दग्धतिथ्याख्यविचार ।

चापांत्यगे गोघटगे पतंगे कर्काजगे स्त्रीमिथुने स्थिते च ।
सिंहालिगे नक्रघटे समाः स्युस्तिथ्यो द्वितीयाप्रमुखाश्च दग्धाः॥६६॥

अन्वयः—पतंगे ( सूर्ये ) चापान्त्यगे ( धनुर्मीनगते ) गोघटगे ( वृषकुम्भस्थिते ) कर्काजगे च ( पुनः ) स्त्रीमिथुनेसिंहालिगे नक्रघटे च स्थिते 'सति' द्वितीयाप्रमुखाः समाः ( समसंख्यकाः तिथयः ) दग्धाः ( दग्धसंज्ञकाः ) भवन्ति ॥ ६६ ॥

भाषा—धन और मीन के सूर्य में द्वितीया, वृष तथा कुंभ के सूर्य में चौथ, कर्क, और मेष के सूर्य में षष्ठी, कन्या और मिथुन के सूर्य में अष्टमी, सिंह और वृश्चिक के सूर्य में दशमी, मकर और तुला के सूर्य में द्वादशी तिथि दग्धा होती है ॥ ३६ ॥

जामित्रदोष ।

लग्नाचंद्रान्मदनभवनगे खेटे न स्यादिह परिणयनम् ।
किंवा बाणाशुगमितलवगैर्जामित्रं स्यादशुभकरमिदम् ॥६७॥

अन्वयः—लग्नात् ( विवाहलग्नात् ) चन्द्रात् 'वा' मदनभवनगे ( सप्तमभवनगते ) खेटे ( ग्रहे ) इह परिणयनम् ( विवाहः ) न स्यात् । किंवा बाणाशुगमितलवगे ( पञ्चपञ्चाशन्मिते नवांशगे ग्रहे ) जामित्रं ( जामित्रनामा दोषः ) स्यात् । इदं अशुभकरं 'भवति' ॥ ६७ ॥

भाषा—लग्न से अथवा चन्द्रमासे सातवें स्थान में कोई ग्रह हो तो विवाह शुभ नहीं होता, अथवा पचपनवें नवमांशका भाव विवाह में अशुभ है। यह सूक्ष्म जामित्र दोष कहलाता है और अशुभकारक है॥ ६७॥

एकार्गलदोष।

एकार्गलोपग्रहपातलत्ताजामित्रकर्तर्युदयास्तदोषाः।
नश्यंति चद्रार्कबलोपपन्ने लग्ने यथार्काभ्युदये तु दोषाः॥६८॥

अन्वयः—चन्द्रार्कबलोपपन्ने (चन्द्रसूर्ययोः स्वोच्चमित्रादिराशिस्थितत्वरूपेण बलेन युक्ते सति) एकार्गलोपग्रहपातलत्ताजामित्रकर्तर्युदयास्तदोषा नश्यन्ति। यथा अर्काभ्युदये (सूर्योदये) दोषा (रात्रिः) नश्यति॥ ६८॥

भाषा—चन्द्रमा और सूर्य के बलसे लग्नमें एकार्गल, उपग्रह, पात, लत्ता, जामित्र, कर्तरी और उदयास्तसम्बन्धी सब दोष नष्ट हो जाते हैं जैसे सूर्य के उदय में रात्रि नष्ट हो जाती है॥ ६८॥

देश विशेष से दोषोंका अपवाद।

उपग्रहर्क्षं कुरुबाह्लिकेषु कलिंगवंगेषु च पातितं भम्।
सौराष्ट्रशाल्वेषु च लत्तितं भं त्यजेत्तु विद्धं किल सर्वदेशे॥६९॥

अन्वयः—कुरुबाह्लिकेषु उपग्रहर्क्षम्, कलिङ्गवंगेषु पातितं भं, सौराष्ट्रशाल्वेषु च लत्तितं भं, विद्धं भं किल (निश्चयेन) सर्वदेशे त्यजेत्॥ ६९॥

भाषा—कुरु और बाह्लीक देश में उपग्रहदोष, कलिंग और बंगदेश में पातदोष, सौराष्ट्र और शाल्व देश में लत्तादोष और सब देशों में वेध दोष त्यागने योग्य होता है॥ ६९॥

दस दोषों के बनाने का क्रम।

शशांकसूर्यर्क्षयुतेर्भशेषे खं भूयुगांगानि दशेशतिथ्यः।
नागेंदवोर्केन्दुमिता नखाश्चेद्भवंति चैते दशयोगसंज्ञाः॥७०॥

अन्वयः—शशांकसूर्यर्क्षयुतेः (चन्द्रसूर्यनक्षत्रयोर्योगात्) भशेषे खं भूयुगाङ्गानि दशेशतिथ्यः नागेन्दवः अर्केन्दुमिताः नखाश्च एते दशयोगसंज्ञाः भवन्ति॥ ७०॥

भाषा--सूर्य और चन्द्र नक्षत्र से गणना कर गणितांक मिला कर सत्ताइस का भाग देवे। यदि ० । १ । ४ । ६ । १० । ११ । १५ । १८ । १९ । २० । इनमें से जो अंक रहै वही दशयोग समझना चाहिये ॥ ७० ॥

दशयोगफल और परिहार ।

वाताभ्राग्निमहीपचोरमरणं रुग्वज्रवादःक्षति-
योगांके दलिते समे मनुयुतेऽथौजे तु सैकेर्धिते ।
भं दास्रादथ संमितास्तु मनुभिः रेखाः क्रमात् संलिखे-
द्वेधोस्मिन् ग्रहचन्द्रयोर्न शुभदः स्यादेकरेखास्थयोः ॥७१॥

अन्वयः—वाताभ्राग्निमहीपचौरमरणं रुग्वज्रवादाःक्षतिः (एते क्रमशः भवन्ति। यथा शून्यशेषे वातदोषः स्यात । एकशेषे मेघाद्भयम् । चतुःशेषे अग्नेर्भयम् । एवमेव क्रमशः) समे योगांके दलिते मनुयुते, ओजे सैके अर्धिते दास्रात् (अश्विनीतः) भं 'स्यात्' । अथ (अनन्तरं) मनुभिः सम्मिताः (चतुर्दश) रेखाः क्रमात् संलिखेत्, अस्मिन् ग्रहचन्द्रयोः एकरेखास्थयोः वेधः शुभदो न स्यात् ॥ ७१ ॥

भाषा--शून्य बचे तो वातदोष, एक बचे तो अभ्रदोष, चार बचे तो मृत्युदोष, पन्द्रह बचे तो रोगदोष, अठारह बचे तो वज्रदोष, उन्नीस बचे तो कलहदोष और बीस बचे तो द्रव्यनाश दोष जानना चाहिए। यदि चन्द्रमा और सूर्य का नक्षत्र बराबर हो तो आधा करके १४ मिला देवे और इन सबको इकट्ठा करके अश्विनीसे गिने। यदि चन्द्र-सूर्य के नक्षत्र का अंक विषम हो तो एक और मिलाकर आधा कर जो आधे में शेष बचे, उसको अश्विनी से गिने इसे विषमांक कहते हैं। क्रम २ से चौदह रेखा लिखें। यदि एक रेखापर ग्रह चन्द्रमा हो तो यह वेध है और यह शुभप्रद नहीं है ॥ ७१ ॥

वाणदोषकथन ।

लग्नेनाढ्या याततिथ्योंकतष्टाः शेषे नागद्व्यब्धितर्केन्दुसंख्ये ।
रोगो वह्नीराजचौरौचमृत्युर्बाणश्चायंदाक्षिणात्यप्रसिद्धः ॥ ७२ ॥

अन्वयः—लग्नेन ( वर्तमानलग्नेन ) आढ्या ( युक्ता ) याततिथयः ( शुक्लपक्षादिकास्तिथयः ) अङ्कतष्टाः ( नवभिस्तष्टाः ) नागद्वयब्धितर्केन्दुसंख्ये 'सति' रोगः ( रोगाभिधानः ) वह्निः ( वह्निनामकः ) राजचौरौ ( राजचौरनामानौ बाणौ ) च ( पुनः ) मृत्युः बाणः अयम् ( बाणः ) दाक्षिणात्यप्रसिद्धः ( दक्षिणदेशेषु प्रथितोऽस्ति ) ॥ ७२ ॥

भाषा—जिस दिन बाण का विचार करना हो, उस दिन शुक्लपक्षकी प्रतिपदा से बीती हुई सब तिथियोंको गिनके वर्त्तमान दिनतक गिन कर जोड़े और तब नौ का भाग देवे । यदि आठ बचे तो रोगबाण, दो बचे तो अग्निबाण और चार बचे तो राजबाण छः बचे तो चौरबाण, और एक बचे तो मृत्युबाण जानना । यह दाक्षिणात्यों ( महाराष्ट्रों ) में प्रसिद्ध है ॥ ७२ ॥

बाणदोषका अपवाद ।

रसगुणशशिनागाब्ध्याढ्यसंक्रांतियातां-
शकमितिरथ तष्टांकैर्यदा पंच शेषाः ।
रुगनलनृपचौरा मृत्युसंज्ञश्च बाणो
नवहृतशरशेषे शेषकैक्ये सशल्यः ॥७३॥

अन्वयः—रसगुणशशिनागाब्ध्याढ्यसंक्रान्तियातांशकमिति अंकैः (नवभिः) तष्टा 'सती' पञ्च शेषाः स्युश्चेत्तदा रुगनलनृपचौरा ( रोगवह्निराजचौरनामकाः ) बाणाः मृत्युसंज्ञश्च बाणः 'भवति' । शेषकैक्ये नवहृतशरशेषे 'सति' सशल्यः ( दोषसङ्गतः ) बाणः 'स्यात्' ॥ ७३ ॥

भाषा—सूर्यकी संक्रांति के जितने अंश गये हों, उनको छः तीन एक चार इन अंकों में जोड़ देवे। फिर सब अंकों में नौ का भाग देने से अगर पांच बचें तो क्रम से रोग, अग्नि, नृप, चौर और मृत्यु बाण जाने। पुनः नौ का भाग देने से जो कुछ बाकी रहे, उन बचे हुए अंकों को जोड़ के भाग देवे । यदि पांच बचे तो वह शल्य बाण होगा ॥७३॥

| ० | मे. | वृ. | मि. | क. | सिं | कं. | तु. | वृ. | ध. | म. | कुं. | मी. | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| रो० वा० | ६<br>१४<br>२६ | ७<br>१६<br>२५ | ६<br>१४<br>२४ | ५<br>१४<br>२३ | ४<br>१२<br>२३<br>१ | ३<br>१२<br>२३<br>१ | ३<br>११<br>२०<br>२१ | ९<br>१८<br>२७ | ८<br>१७<br>२६ | ९<br>१५<br>२४ | ७<br>१६<br>२५ | ६<br>१५<br>२० | रोगवाण में निविद्ध तिथि |
| अ० वा० | २<br>२०<br>२९ | ११<br>१०<br>२८ | ६<br>१८<br>२७ | ८<br>१७<br>२६ | ७<br>१६<br>२५ | ६<br>५<br>२४<br>८ | ५<br>१४<br>२२ | ३<br>१२<br>२१ | ३<br>१३<br>२१ | २<br>११<br>२९ | १०<br>१६<br>२८ | ९<br>१९<br>२६ | अ० वा० में निविद्ध तिथि |
| रो० वा० | ७<br>२९<br>१ | ३<br>२१<br>३० | २<br>२०<br>२० | १०<br>१९<br>२८ | ९<br>१७<br>२७ | १७<br>२६<br>२५ | ७<br>१६<br>२१ | ६<br>१५<br>२४ | ५<br>१४<br>२३ | ०<br>१३<br>२० | ३<br>१२<br>३० | २<br>१०<br>२० | रा० वा० में निषिद्ध तिथि |
| चौ० वा० | ६<br>५<br>२४ | ५<br>१४<br>२३ | ४<br>१३<br>२३ | ३<br>२९<br>३० | २<br>२०<br>२२ | १०<br>१९<br>२२ | ९<br>१८<br>२७ | ८<br>१७<br>२६ | ७<br>१६<br>२० | ६<br>१५<br>२४ | ५<br>१४<br>२३ | ५<br>१३<br>२३ | चौ० वा० में निषिद्ध तिथि |
| मृ० वा० | १<br>१९<br>२८ | ९<br>१८<br>२६ | ९<br>१७<br>२७ | ७<br>२६<br>२५ | ६<br>१५<br>२४ | ५<br>१४<br>२३ | ३<br>१३<br>२२ | २<br>१२<br>२१<br>३० | २<br>११<br>२०<br>१९ | १०<br>२९<br>२८ | ९<br>१८<br>२७ | ८<br>१७<br>१६ | मृ० वा० में निषिद्ध तिथि |

समयभेद, वारभेद और कर्मभेद से तीन प्रकार का वाणपरिहार ।

रात्रौ चौररुजौ दिवा नरपतिर्वह्निः सदा सन्ध्ययो-
र्मृत्युश्चाथ शनौ नृपौ विदि मृतिर्भौमेऽग्निचौरौ रवौ ।
रोगोथ व्रतगेहगोपनृपसेवायानपाणिग्रहे
वर्ज्याश्च क्रमतो बुधै रुगनलक्ष्मापालचौरा मृतिः ॥

अन्वयः—रात्रौ ( रात्रिसमये ) चौररुजौ ( चौररोगनामानौ ) वाणौ त्याज्यौ दिवा ( दिने ) नरपतिः राजवाणः ( त्याज्यः ) सदा ( सर्वस्मिन् काले अग्निः ( अनलनामको वाणः ) 'त्याज्यः' । सन्ध्ययोः ( प्रातःसंध्यायां सायंसंध्यायां वा ) मृत्युः ( मृत्युनामा बाणः ) 'त्याज्यः' । शनौ ( शनिवासरे ) नृपः बाणः 'त्याज्यः' । विदि ( बुधवासरे ) मृतिः बाणः 'त्याज्यः' । भौमवारे अग्निचौरौ वाणौ 'त्याज्यौ' । रवौ ( सूर्यवासरे ) रोगो बाणः 'त्याज्यः' । अथ व्रतगेहगोपनृपसेवायां ( यज्ञोपवीत-गृहाच्छादनराजपरिचर्यागमनेपु ) क्रमतः बुधैः ( विद्वद्भिः ) रुगनलक्ष्मापालचौरा मृतिश्च (रोगवह्निराजचौरमृत्युबाणाः ) त्याज्याः ॥ ७४ ॥

भाषा—रात्रि में चोर और रोगवाण, दिन में राजबाण, सन्ध्या के

समय अग्निबाण, प्रातःकाल मृत्युबाण, शनैश्चर को राजबाण, बुधको रोगबाण, यज्ञोपवीत में रोगबाण, घरके छाने बनवाने में अग्निबाण, राज-सेवा में राजबाण, यात्रा में चौर और विवाह में मृत्युबाण दूषित होता है।

ग्रहों की दृष्टि।

त्र्याशं त्रिकोणं चतुरस्रमस्तं पश्यंति खेटाश्चरणाभिवृद्ध्या।
मंदो गुरुर्भूमिसुतः परे च क्रमेण सम्पूर्णदृशो भवन्ति ॥७५॥

अन्वयः—खेटाः (ग्रहाः) त्र्याशं त्रिकोण चतुरस्रं अस्तं चरणाभिवृद्धया पश्यन्ति। मन्दः (शनिः) गुरुः भूमिसुतः च (पुनः) परे (अन्ये) ग्रहाः क्रमेण (परम्परया) सम्पूर्णदृशः भवन्ति ॥ ७५ ॥

भाषा—जिस स्थान में ग्रह स्थित हो वहां से तीसरे और दशवें स्थान को एक चरण की दृष्टि से, नवें और पांचवें स्थानको दो चरण की दृष्टि में, चौथे तथा आठवें स्थान को तीन चरण की दृष्टि से और सातवें स्थानको पूर्ण दृष्टि से देखते हैं। शनैश्चर अपने स्थान से तीसरे तथा दसवें स्थानको, वृहस्पति पांचवें तथा नवें स्थान को चार चरण से देखता है। सूर्य चन्द्रमा वुध और शुक्र ये सातवें स्थान को पूर्ण दृष्टि से देखते हैं ॥७५॥

उदयास्तादिशुद्धिः।

यदा लग्नांशेशो लवमथ तनुं पश्यति युतो
भवेद्वायं वोढुः शुभफलमनल्पं रचयति।
लवद्यूनस्वामी लवमदनभं लग्नसदनं
प्रपश्येद्वा वध्वाः शुभमितरथा ज्ञेयमशुभम्॥७६॥

अन्वयः—यदा लग्नांशेशः लवं (नवांशं) अथ तनुं (लग्नं) पश्यति अयं (लग्नांशेशः) 'नवांशेन लग्नेन वा' युतः 'स्यात्तदा' वोढुः वरस्य अनल्पं (वहु) फलं (शुभफलं) रचयति। लवद्यूनस्वामी लवमदनभं वा लग्ने मदनं प्रपश्येत्तदा वध्वाः (कन्यकायाः) शुभं कल्याणं स्यात्। इतरथा अशुभं ज्ञेयम्॥७६॥

भाषा—यदि लग्नका नवांशेश नवांशको या लग्नको देखे या नवमांश अथवा लग्न से युक्त हो तो वर के लिये शुभ होता है। नवांश से सप्तम नवांशका स्वामी नवांश की राशि से सप्तम

देखता हो या सप्तमभाव से युक्त हो अथवा लग्नसे सप्तम भावको देखता हो या सप्तमभाव से युक्त हो तो वधू के लिये विशेष शुभ फल देनेवाला होता है और लग्न के नवमांश का स्वामी नवमांश या लग्नको न देखता हो या युक्त न हो तो वर के लिये अशुभ है और नवमांश से सप्तम-नवमांश का स्वामी नवांश के सप्तम को या लग्न से सप्तमभावको न देखता हो या युक्त भी न हो तो वधू के लिये अशुभ है ॥ ७६ ॥

लवेशो लवं लग्नपो लग्नगेहं प्रपश्येन्मिथो वा शुभं स्याद्वरस्य ।
लवद्यूनपोंशद्युनं लग्नपोस्तं मिथो वेक्षतेस्याच्छुभं कन्यकायाः ॥७७॥

अन्वयः—लवेशः ( नवांशाधिपः ) लवं लग्नपः ( लग्नस्वामी ) लग्नगं प्रपश्येत् वा मिथः ( परस्परं ) प्रपश्येच्चेत्तदा वरस्य शुभं स्यात् । लवद्यूनपः द्यूनं अंशं लग्नपः अस्तं ईक्षते अथवा मिथः ( अन्योन्यं ) प्रपश्येत्तदा कन्यकायाः शुभं स्यात् ॥ ७७ ॥

भाषा—नवांश का स्वामी नवांश को और लग्नका स्वामी लग्न को देखता हो तो वर को शुभदायक है अथवा परस्पर नवमांशस्वामी लग्नको देखता हो और लग्नेश नवांशको देखता हो तो वरको शुभदायक होता है । नवमांश से सप्तम नवमांशका स्वामी अपने अंशसे सप्तम नवमांशको देखता हो और लग्नस्वामी लग्न से सप्तम स्थान देखता हो तो कन्या को शुभ है अथवा परस्पर नवमांश से सप्तमभावका स्वामी लग्न से सप्तम स्थान को देखता हो और लग्न से सप्तमभावका स्वामी सप्तम नवमांशको देखता हो तो भी कन्याको ही शुभ होता है ॥ ७७ ॥

लवपतिशुभमित्रं वीक्षतेंशं तनुं वा
परिणयनकरस्य स्याच्छुभं शास्त्रदृष्टम् ।
मदनलवपमित्रं सौम्यमंशद्युनं वा
तनुमदनगृहं चेद्वीक्षिते शर्म्म वध्वाः ॥७८॥

अन्वयः—लवपतिशुभमित्रं तनुं वा वीक्षते 'तदा' परिणयनकरस्य ( वरस्य ) शास्त्रदृष्टं शुभं ( कल्याणं ) स्यात् ( मदनलवपमित्रं ) सौम्यं अंशं वा द्यूनं तनुं मदनगृहञ्चेद् वीक्षते 'तदा' वध्वाः (कन्यकायाः) शर्म ( कल्याणं ) 'स्यात्' ॥७८॥

